# लघुसन्देशम्

डॉ. परमानन्द झाः
डॉ. बलराम शुक्लः



# लघुसन्देशम्

## (सन्देशकाव्यसंग्रहः)

डॉ. परमानन्द झा
डॉ. बलराम शुक्लः






विद्यानिधि प्रकाशन
दिल्ली

# समर्पणा

पायं पायमपायहारि मधुरं यद् वाङ्मयं बाल्यतो
व्याधूतो बलवान् स मेऽतिविषमो दूरादबोधज्वरः।
जातं यत्कृपया च जीवनमिदं कृत्स्नं सुधानिर्भरं
दिव्यां वाचममूमिहाद्य कलये कृत्याऽनया सादरम्।।

सुरभारतीसद्भक्तिसमाकुलः
**परमानन्दः**

# अभिनन्दनम् !

दिल्लीमधिवसन्तौ द्वौ युवानौ वैयाकरणौ डॉ० परमानन्दझा-डॉ० बलरामशुक्लौ कवित्वक्षेत्रे कामप्यपूर्वां सुषमां वितन्वानाववलोक्येते लघुसन्देशकाव्यप्रणयनमिषेण।

उभयोः कव्योः परिचयार्थमत्र संक्षेपतः किञ्चिदुपन्यस्यते। डॉ० परमानन्दझामहाभागस्य जन्म बिहारराज्यान्तर्वर्तिनि 'मधुबनी'जनपदे बुधजनगरिष्ठे 'गङ्गौली'ग्रामे विद्वद्वरात् जनकात् पं० श्रीकृष्णानन्दझा-महाभागात् जनन्यां श्रीमत्यां रुक्मिणीदेव्यां १८.७.१९७७तमे दिनाङ्केऽभूत्। अनेन कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालयाद् व्याकरणाचार्योपाधिः, दिल्लीविश्वविद्यालयाच्च संस्कृते कलानिष्णातोपाधिः, व्याकरणक्षेत्रे 'लघुमञ्जूषायां भाषिकार्थस्यावधारणा आधुनिकसन्दर्भे तदुपयोगिता चेति विषयबिन्दुमधिकृत्य विद्यावाचस्पत्युपाधिश्चाधिगतः। स्वच्छात्रावस्थायां विविधसाहित्यिकशास्त्रीयस्पर्धासु अनेन नैके पुरस्कारा अधिगताः। सम्प्रति चायं दिल्ल्यामध्यापनवृत्त्या सारस्वतसेवया च काव्यशास्त्रविनोदिबुधजनोचितां दैनन्दिनीं चर्यामवलम्बते। अनेन महाभागेन अनेकानि काव्यानि प्रणीतानि येषां प्रकाशनं सद्य एव सम्भाव्यते।

डॉ० बलरामशुक्लस्य जन्म उत्तरप्रदेशान्तवर्तिनि महराजगञ्जजनपदे सोहरौनाराजाग्रामे बुधवरजनकात् पं० श्रीरामचन्द्रशुक्लमहाभागात् श्रीमत्यां फूलमतीशुक्लायां २५.०९.१९८१तमे दिनाङ्के समजायत। अनेन गोरखपुर-विश्वविद्यालयात् स्नातकोपाधिः, दिल्लीविश्वविद्यालयाच्च संस्कृते

कलानिष्णातोपाधिः, व्याकरणक्षेत्रे 'वाक्यार्थः-भारतीयसिद्धान्तानां रेलेवेंससिद्धान्तस्य सन्दर्भे विश्लेषणम्' इति विषयमधिकृत्य विद्यावाचस्पत्युपाधिश्चाधिगतः। सम्प्रत्येष दिल्लीनगर्यामध्यापनकर्मणि संलग्नः काव्यशास्त्रविनोदेन स्वीयं स्वर्णिमं समयम् अतिवाहयति। अनेन संस्कृतवाङ्मयमतिरिच्य पारसीकसाहित्येऽपि भूयान् श्रमः कृतः।

अथ किमिदं लघुसन्देशकाव्यमित्यत्र किञ्चिदुच्यते। अद्यत्वे करे करे जङ्गमालापयन्त्रं पदं दधानमस्ति यत् 'मोबाइल फ़ोन' नाम्ना सामान्यजनेषु प्रसिद्धम्। अस्मिन् एस्०एम्०एस्०-प्रेषणप्रक्रियैव लघुसन्देशप्रेषण मित्युच्यते। तत्र युवकाः प्रायश्चित्रविचित्रलघुसन्देशानां विनिमयं कुर्वाणाः बसयानेषु, मेट्रोयानेषु, मार्गेषु, तेषु तेष्वन्येषु वा स्थानेषु कालयापनं कुर्वन्ति। डॉ०परमानन्दझामहाशयः डॉ०बलरामशुक्लश्च अनेन साधनेन काव्यशास्त्रविनोदं कुरुतः। २००६तमात् २०१०तमं वर्षं यावदेताभ्यां स्वचलदूरभाषेऽथवा चलदूरवाण्यामथवा जङ्गमाभाषेऽथवा मोबाइलदूरध्वनौ विचाराणामादानं प्रदानं च पद्यरूपेण कृतम्। इत्थमस्यां रचनायां विज्ञानसाहित्ययोर्मैत्रीभावोऽवलोक्यते। यन्त्रेऽक्षरयोजना सन्देशप्रेषणं च विज्ञानं, मनसा काव्यरचना च साहित्यम्। अस्यां पद्यरचनायामुभयोरपि प्रत्युत्पन्नमतित्वं, पद्यरचनापाटवं, छन्दोऽभ्यासः, भाषाधिकार इत्यादयो विशेषाः साक्षीभवन्ति।

कविभ्यामाभ्यामनुष्टुप्शार्दूलविक्रीडितार्यावसन्ततिलकद्रुतविलम्बितस्रग्धरा-वैतालीयपृथ्वीप्रमाणिकातोटकमन्दाक्रान्तास्रग्विणीन्द्रवज्रोपेन्द्रवज्रोपजातिहरिणी-पुष्पिताग्राशिखरिणीमालिनीशालिनीवंशस्थेन्द्रवंशोपजातिस्वागतौपच्छन्दसिकवृत्तानां प्रयोगः कृतः। एभिर्वृत्तैराभ्यां भक्तिभावस्य प्रकाशनं कृतम्, शिष्टहास-स्याभिव्यक्तिः कृता, मित्रसंलापस्य सुषमा प्रदर्शिता, युवकालोचिता भावा उद्गीर्णाः, कवित्वमवलम्ब्य सिद्धान्तवाक्यानि संस्थापितानि, समाजस्य पर्वणां चर्चा च व्यधायि। सर्वाण्यपि पद्यानि मुक्तककोटौ स्थापयितुं

शक्यन्ते, सर्वत्र च सुभाषितत्वं साक्षात्कर्तुं शक्यते। अलङ्कृता संस्कारवती गीर्वाणवाणी आद्यन्तं विजयते। दीपावल्याः शोभां वर्णयन् कविवरः परमानन्द झा लिखति—

**चारुचञ्चत्तडिद्दीपिकालङ्कृतं**
**विस्फुरन्नैकविद्युज्झरीझङ्कृतम्।**
**स्नेहसर्पिर्ज्वलद्धर्षदीपोल्लसत्**
**सर्वमुल्लासयत् पर्व दीपावली।।**

दीपावलीमालक्ष्यैव पद्योत्तरं ददानः कविप्रेष्ठो बलरामशुक्ल एवं लिखति—

**राधिकाराधितोऽसंख्यसूर्यप्रभः**
**कृष्णचन्द्रोऽस्त्वमातुल्यचित्ते स्फुटः।**
**हायनेऽस्मिन्न यायाद् वृथा प्रार्थितं**
**सर्वमुल्लासयत् पर्व दीपावली।।**

एवमेव गोवर्धनपूजां, भ्रातृद्वितीयां, षष्ठीपूजाम्, ईदपर्व चाश्रित्य प्रणीतेषु पद्येषु समाजस्योल्लासोऽभिव्यज्यते। नववत्सरस्य शुभा कामनापि कविभ्यां प्रदत्ता।

अलंकाराणामपि अपृथग्यत्ननिर्वर्त्यता अस्मिन् लघुसन्देशकाव्येऽक्षिलक्ष्यी भवति। 'सद्यशांसि शरदिन्दुनिभानि' 'विट इव नवीनः कविवरः' 'स्त्रीव कविता' 'पुरन्ध्रीव कविता' 'वणिगिव कविः क्लेशसहनः'— इत्यादिषु स्थलेषु उपमायाः सौष्ठवं निभालनीयमस्ति।

एवमेव रूपकादयोऽर्थालङ्कारा अनुप्रासादयः शब्दालङ्काराश्च यथावसरं कव्योः सूक्तीः सुशोभयन्ति।

लघुसन्देशकाव्यमित्याख्यां नवीनां काव्यविधां प्रवर्तयितुमुभावप्येतौ

युवानौ कवी मया सस्नेहं सादरं चाभिनन्द्येते। आशासे, सत्काव्येऽस्मिन् प्रसिद्धे जाते सहृदया अस्यास्वादं गृहीत्वानन्दिता भविष्यन्ति।

वर्धतामुभयोरपि काव्यवल्लरी। वर्धन्तां चास्या रसास्वादनलोलुपाः सहृदयरोलम्बाः।

भ्रातृद्वितीया, वि० सं० २०७०　　　　　　　　　　　　विदुषामाश्रवः
०७.०७.२०१३　　　　　　　　　　　　　　　　**रमाकान्तशुक्लः**

'रमालयः' आर-६, वाणीविहारः
नई दिल्ली-११००५९

# आस्माकीनम्

संस्कृतसाहित्यस्य एतावत्यां समृद्धौ संवादानां महदवदानं विलसति। पुरुरवउर्वशीविश्वामित्रनदीयमयमीसरमापणिप्रभृतिभिर्नैकैः संवादरत्नैरालोकिताः वैदिकसंहिताः संवादशैल्याः प्राचीनतमानि प्रशस्यानि च निदर्शनानि सन्ति। आरण्यकानि उपनिषदश्च यमयाज्ञवल्क्यसदृशानां ज्ञानगरिष्ठानां गुरूणां जनकनचिकेतःसदृशानां जिज्ञासुजनानां च मध्ये धर्माध्यात्मदर्शनविमर्शनैस्तत्त्वसंवादैरेव परिव्याप्तानि। व्याकरणादीनां वेदाङ्गानां, न्यायमीमांसादीनां दर्शनानां, तन्त्रागमादीनां विविधशास्त्राणां च विकासः संवादद्वारेणैव समजनि। किं बहुना, रामायणं नाम आद्यं महदार्षकाव्यमपि महर्षिणा वाल्मीकिना कुशलवयोः कुशलसंवादैरेव संरचितं, प्रजासु प्रचारितं च। महाभारते तु सूतवैशम्पायनयोः, सञ्जयधृतराष्ट्रयोः, श्रीकृष्णकौन्तययोश्चेति स्तरत्रये संवादाः उपलभ्यन्ते। सुविपुलपरिणाहं पुराणसाहित्यं देवीदेवानाम् ऋषिपुङ्गवानां च सकललोकोपकारिण्या पारस्परिकसंवादप्रणाल्यैव प्रणीतम्।

लौकिकसंस्कृतसाहित्यशृङ्खलायाः पुरोधाः कविस्तत्र भवान् कालिदासः मेघदूतमिषेण अभिनवां दूतकाव्यपरम्परामारभ्य चेतनैरिव अचेतनैरपि सरससंवादप्रवाहं प्रतिष्ठापयति। अथ तदनुवर्त्तीनि भृङ्गपवनदूतादीनि भव्यानि दूतकाव्यानि तस्यैव संवादप्रवाहस्य परीणामं प्रकटयन्ति। संस्कृते परमसमृद्धायाः अन्योक्तिकाव्यशृङ्खलायाः सङ्केतोऽपि एतां चेतनाचेतनोभयगतां विशदसंवादशैलीमुद्दिश्यैव दरीदृश्यते। किञ्च महति सामन्तवादिनि मध्ययुगे राज्ञां पारस्परिकसन्देशविनिमयाय राजकविभिरालिखिताः सन्देशकाव्यांशाः संवादकाव्येतिहासस्य कमपि नवमायामं प्रकाशयन्ति।

भारतस्य आधुनिके विकसितविंशशताब्दे संवादकाव्यानां नूतनस्वरूपस्योद्घाटनं विद्वत्कविमूर्धन्येन प्रो० सत्यव्रतशास्त्रिणा नानापत्रसन्देशाधृतं पत्रकाव्यं प्रणीय विहितम्।

तदेवं संस्कृतसाहित्यजगति यथाकालं पृथग्विधान् प्रविधीन् पुरस्कृत्य संवादशैल्या संदृब्धानां काव्यानामनाहतः क्रम आदित एवानुवर्तते।

साम्प्रतिकी एकविंशी शताब्दी सञ्चारक्रान्तेर्विराजते। दूरभाषचलदूर-भाषवैश्विकान्तर्जालादीनां द्रुततरसंचारसौविध्यानामनुदिनमेधमानेन महाजालेन कृत्स्नमपि विश्वमालोडितमान्दोलितं च विलसति। विकसितसंवाद-साधनेष्वेतेष्वन्यतमो दूरवाग्लघुसन्देशसेवाविधिर्नाम अद्यत्वे मित्राणां महदुपकारकं तन्त्रम्। इदमेव लघुसन्देशसेवापरं तन्त्रोत्तरमवलम्ब्य समुन्नीतं प्रस्तुतं ललितलघुसन्देशकाव्यं वस्तुतः संस्कृतसाहित्यजगतः संवादशृङ्खलायाः अभिनवोऽध्यायो विद्यते।

पुनरुक्तभूतविषयव्यापारशतानुवर्त्तिन्याः नितरां नैरस्योत्पादिन्याः दैनन्दिन्याः मध्ये काव्यमाधुरीविनिमयव्याजेन स्वमनो विनोदयितुं मया विगतेषु चतुर्षु वर्षेषु काव्यप्रतिभाधनेन अनुजकल्पेन आयुष्मता डॉ० बलरामशुक्लेन साकं दूरभाषिकलघुसन्देशप्रणालिकया काव्यमयसन्देशानां विनिमयो व्यधायि। अथ आवयोर्नव्यानि सन्देशकाव्यान्येतान्यास्वाद्य सद्योमुदितैः सहृदयसुहृद्रसिकैः सकलानप्येतान् प्रकीर्णसन्देशान् संकलय्य नव्यं काव्यगुम्फमेकं प्रकाशयितुम् अहमतिमात्रमागृहीतः। अहमपि तेषां प्रेरणया प्रोत्साहनैश्च सयत्नमस्मिन् शुभे कर्मणि सत्वरं प्रावर्त्तिषि, सर्वान् लघुसन्देशांश्चैकत्रीकृत्य परिसम्पाद्य च प्रकाशकवर्याय प्रायच्छम्। सम्प्रति तदिदं लघुसन्देशं नाम नूतनं काव्यम् अत्रभवतां भवतां करकमलेषु विराजते।

काव्येऽस्मिन् आमन्त्रणकुशलक्षेमजिज्ञासाप्रभृतयः साधारणतराः, नानाविधविषयचिन्तनपराः कल्पनासमृद्धिभाजः सुललितपदविन्यासाः अलङ्कारबहुलाः विशिष्टाश्चेत्युभयविधाः संदेशकाव्यांशाः स्वाभाविकतया

संवादक्रमागताः अन्योन्यं प्रति विरच्य प्रेषिताः समाविशन्ति। किञ्च लघुसन्देशं नाम काव्यमेतत् एकविंशशताब्द्या लघुसन्देशपरस्य नूतनसंचारप्रविधेः समाश्रयेण समारब्धस्य नवसाहित्ययुगस्य प्रातिनिध्यविधानेन सहैव आधुनिकसमसामयिकविषयवस्तूनामाश्रयैः नवोपमानोत्प्रेक्षणैश्चापि किमपि विशिष्टं नावीन्यमादधाति। उदाहरणार्थं प्राकृतसंस्कृतयोः तुलनां पुरस्कृत्य आवयोः प्रवृत्ता चर्चा निभाल्यताम्—

**मृत्तैलं प्राकृतं रक्षद् बुभुक्षुमनुजव्रजम्।**
**संस्कृतं च शिलातैलं धुताधुनिकधीध्वजम्।।**
**प्राकृतं ग्राम्यसरसीपद्मसौरभमाः प्रियम्।**
**संस्कृतं श्रीमदामोद उन्नयन्नागरश्रियम्।।**

— ल०स० १३

एवमेव ईदपर्ववर्णनाव्याजेन समुत्प्रेक्षितं पद्यमिदं निदर्शनीयमस्ति—

**भवेशभूषोदयदर्शनाप्तपर्याप्तदीर्घव्रतमुक्तिलाभम्।**
**मोहं मदं मन्दयतादमन्दं मौहम्मदानामिदमीदपर्व।।**

— ल०स० १८

एतदतिरिच्य नैकानि स्थलानि तादृशानि सन्ति, यत्र रसिकजनैः मधुरस्य अभिनवकल्पनासमृद्धस्य च काव्यस्यास्वादः ग्रहीतुं शक्यः। वस्तुतः सर्वमप्येतद् भगवत्याः सुरभारत्याः सेवप्रसादविजृम्भितमेव विलसतीति विभावयामि।

नव्यकाव्यप्रकाशनामये महति सारस्वतेऽस्मिन् शुभे कर्मणि सर्वादौ मया स्वीयकाव्यशास्त्रीयशिक्षासंस्कारप्रसादप्रदाः सर्वतन्त्रस्वतन्त्राः प्रातःस्मरणीयाः पूज्याः पितृपादाः **प्रो० कृष्णानन्दझा**महाभागाः सश्रद्धं प्रणम्यन्ते। तदनु काव्यस्यास्य पृथक्तया प्रकाशने ईदृशरूपपरिकल्पने च परमप्रेरणाप्रदानां परमादरणीयगुरुवर्याणां **प्रो० दीप्तित्रिपाठि**चरणाना-मभिवादनमाचरामि। काव्यस्यास्य नैकेषां घटकलघुसन्देशानां

सुव्यवस्थितरूपेण संकलनं विधाय परममुपकृतवान् अनुजकल्पः **डॉ० बलरामशुक्लः** सुतरां धन्यवादार्हः। काव्यस्यास्य स्नेहेन, शुभाशिषा, प्रास्ताविकप्ररोचनावचनैश्च शोभामभिवर्धितवतः परमादरणीयान् राष्ट्रकवितल्लजान् डॉ० रामाकान्तशुक्लचरणान् प्रति अपारमाभार-मभिव्यनज्मि।

किञ्च यथाकालं प्रबलप्रोत्साहनया मामेतादृशेषु सारस्वतकर्मसु प्रवर्तयतः सकलानपि मातृगुरुभ्रातृमित्रबन्धून् सगौरवं सकार्तज्ञ्यं चानुस्मरामि। काव्यगुम्फस्यास्य शुद्धतरटङ्कणमुद्रणकृत्यनिष्पादनार्थं क्रमशो भगिनीं **सुजातां, डॉ० राधेश्यामशुक्लवर्यं** च शतशः साधुवादैः सभाजयामि।

अन्ते सहजमानुजत्रुटिमर्षणाय सकरुणकटाक्षवर्षणाय च सकलान् गुणालम्बान् सहृदयविद्वद्रसिकरोलम्बान् पुनः पुनरभ्यर्थयन्निम्नां सन्देशकाव्यकृतिं तेषां करसरोजेष्वभ्यर्पयन् निवेदयति—

**बलरामेण शुक्लेन साकमस्माकमुद्धृताः।**
**दूरवाग्लघुसंदेशालापाः केऽप्यत्र संचिताः।**
**भृङ्गवृत्तिभिरालुब्धैर्विदग्धैर्मधुरोल्बणाः।**
**आस्वाद्यन्तां सहृदयैर्नव्यकाव्यसुधाकणाः।।**

गणतन्त्रदिवसः, २०१३ — रसिकजनस्नेहदुर्ललितः
जनकपुरी, नवदेहली — **परमानन्दः**

# लघुसन्देशम् : अनुक्रमः

## (१)

## तं बालकृष्णं स्तुमः

परमानन्दः- ज्ञेयं तत्त्वमशेषशास्त्रनिहितं देयं द्विजेभ्यः श्रुतं
निर्मेयं नवदिङ्मुखं प्रतिभया जेयं जगद् वादिनाम्।
उन्नेयं कमनीयमेव किमपि प्रौढैकपेयं सदा
ध्येयं यस्य बभूव कृष्णचरणं तं बालकृष्णं स्तुमः।।

(२९.०२.२००६)

(कवितार्किकचक्रचूडामणेः म०म०बालकृष्णमिश्रस्य
कृते कृतम् अभिनन्दनपद्यमास्वादनाय प्रेषितम्)

बलरामः- 'कृत्यानां कर्तरि वे' त्यनेन पद्ये विकल्पषष्ठ्याऽत्र।
'यस्य बभूवे'त्यादौ शाब्दिकभावः स्फुटो भवताम्।।

(२९.०२.२००६)

## (२)

## शोधोऽवरोधश्च

बल०- शोधोऽस्ति शास्त्रपठनं प्रति प्रत्यवायः
प्रत्यूहितः स्वयमयं च विभिन्नशास्त्रैः।
अन्योन्यसाह्यमपहाय कथं दधाते
भावं द्विषन्मतमिमं विषयेऽस्मदीये।।

(२९.०९.०६)

परमा०- स्वाच्छन्द्यमेव पठनेऽवरुणद्धि शोधो
निर्धार्य कार्यमुररीकृतदिग्विशेषम्।
श्रेयः श्रयस्व प्रथमं प्रथयस्व पश्चात्
प्रेयःपथानिति हि शास्ति हितैषि शास्त्रम्।।

(२९.०९.०६)

बल०- शब्दार्थयोः समतया ग्रथनं विभाति
यत्रैव ता बुधजनस्य जयन्ति वाचः।
गुम्फो गिरां निकषतां विषमः प्रयाती
त्याहुः पुनः कविवरा अपरे किमर्थम्।

(२९.०९.०६)

## (३)

## विजया दशमी

परमा०- विजयादशमी दद्यात् सदा वो विजयश्रियम्।
धनं धन्यं बुधैर्मान्यं सद्यशो धवलां धियम्।।

(२९.०९.०६)

बल०- भवते च भवेद् भूयो भगवद्धामती कृपा।।

(०६.१०.०६)

## (४)

## नमः शब्दवेधसे

परमा०- चराचरजगज्जालसूत्रभेदपटीयसे।
कस्मैचन नमस्तस्मै परस्मै शब्दवेधसे।।

(०५.१०.०६)

बल० - यणादिरिव योऽन्तःस्थःस्वरादिरिव चाव्ययः।
तमादिमपि भूतानामनादिकमुपास्महे।।
(०५.१०.०६)

(५)

## न कथमाः कथमाः कथमाः कथम्

बल० - न कथमागतवान् समितौ भवान्
भवति वास्तुमपेक्ष्य हि पाठनम्।
नियतमैतु ततः शनिवासरे।।
(०६.१०.०६)

परमा० - 'न कथमाः कथमाः कथमाः कथम्'।
(०६.१०.०६)

परमा० - स्यान्मन्येऽद्यारब्धा नूतनविषयप्रवर्तना गोष्ठी।
मम चाप्यवकाशः श्वस्तत्रोपस्थातुमायतिष्ये तत्।।
(०६.१०.०६)

बल० - अविकलं विकलं गमितं वृथा
जननमेव कदापि मनोऽकृथाः।
सजलनीरदनीलपदार्चनं
न कथमाः कथमाः कथमाः कथम्।।
प्रियतमोऽसुलभोऽपि च ह्रीर्गुरु
र्गुरुजनैः प्रसभं परिवारिता।
हतकरागमथापि बतात्यजं
न कथमाः कथमाः कथमाः कथम्।।

कृतकृता कविना कविताक्रिया
कलयता किल कीर्त्तिकुमारिकाम्।
कृतकता कथयस्व बहिष्कृता
न कथमाः कथमाः कथमाः कथम्।।

(०६.१०.०६)

परमा० - भवदनुत्तमकाव्यसुधारसं
ननु निपीय सकृन्मम मानसम्।
अकथयन्मुहुरर्थिततत्कथं
न कथमाः कथमाः कथमाः कथम्।।

(०६.१०.०६)

(६)

## मित्र किं चात्र चित्रम्

बल० - यैश्छन्दोभिः स्म पूर्वं कविवरनिकराः कुर्वते काव्यरत्नं
तैः सामान्याऽपि चर्चा भवति भगवती वाग् विचित्रं समृद्धा।।

(०६.१०.०६)

परमा० - यैः कुम्भैः पर्यवेषि प्रथममिह सुधा, साधयामो वयं तै
रद्यामभःकार्यजातं व्यवहृतिकुशला मित्र किं चात्र चित्रम्।।

(०६.१०.०६)

(७)

## नटी घटी

बल० - भवता कविता सुमण्डिता
चरणाभ्यामिव रत्ननिर्मिताभ्याम्।

दयिताननमण्डलं प्रियस्
ताण्डवपण्डितयुग्मकुण्डलेन।।
(०६.१०.०६)

परमा० - प्रकृतिप्रतिमा नटी घटी
ननु निर्दिश्य निशीथिनीकटीम्।
कवितामृतकुम्भमावयो
रधुनोद्वोढुमये न काङ्क्षति।।
(०६.१०.०६)

(८)

## क्व च तुला त्रिलोके तव

बल० - सुधामधुतया समं गुडरसस्य संमिश्रणं
विदग्धजनमण्डलेऽबुधजनस्य संस्थापनम्।
शशिन्युदित एव यद् विफलमार्क्षमुद्दीपनं
भवत्कवितया समं मम कवित्वसंमेलनम्।।
(०७.१०.०६)

परमा० - सुधां क इह जानते गुडरसं न के जानते
बुधो भवतु वाऽबुधो न बत किन्तु दग्धो भृशम्।
शशी न नियतोदयः सफलमृक्षमुद्दीप्यते
विहायसि सदा मुदा, क्व च तुला त्रिलोके तव।।
(०७.१०.०६)

(९)

## स्वप्रशस्तिः

बल०- विनम्रता भवद्गता तनोति तां परार्हताम्।

(०७.१०.०६)

परमा०- न मित्र चात्र नम्रता परं परा यथार्थता।

(०७.१०.०६)

बल०- प्रददाति सुखं स्वप्रशस्तिरियत्
प्रथमं प्रथितं प्रथितोऽस्मि भृशम्।

(०७.१०.०६)

परमा०- तुदतीह परं तुलना मम मां
सुधया च बुधेन च तच्छशिना।।

(०७.१०.०६)

परमा०- न सम्प्रति स्मृतिं गता ह्य उद्गता नटी घटी।
बल०- स्मृता स्मृताऽक्षमक्षमा, भवेन्निशीथिनी शुभा।।

(०७.१०.०६)

(१०)

## सुहृत्स्वागतम्

परमा०- क्वासीदानीं ननु न चिरतः प्राप्नुवानोऽस्मि तावत्।
बल०- तस्मिन् गोष्ठीभवनभवने स्वागतं व्याहरामि।

(०९.१०.०६)

बल०- वासन्तानामिव तु महतामागतिर्भाति, किन्तु
प्रेष्ठानां तद् भवति चलनं हन्त ज्येष्ठानिलानाम्।

(०९.१०.०६)

परमा० - अन्योन्याभ्यां वलयितहृदोर्नित्यमेकात्मनोर्नौ
किं वा कुर्यादहह! सुहृदोरागतिर्वा गतिर्वा।।
(०९.१०.०६)

## (११)

## पुनरुक्तिविरक्तिमुपैति मनः

परमा० - पुनरुक्तिविरक्तिमुपैति मनः!
बल० - किमपेक्ष्य वदन्ति भवन्त इदम्?
(११.१०.०६)

परमा० - उदयात् पुनरस्तमनान्तमये
प्रतिवासरमेकरसं विरसम्।
विदधद् बत चङ्क्रमणानि सखे
पुनरुक्तिविरक्तिमुपैति मनः।।
(११.१०.०६)

बल० - पुनरुक्तिरुदासयते रसनां
नियमोऽस्ति किमु प्रभुनाम्नि परम्।
रसपानपरं न कदापि यतः
पुनरुक्तिविरक्तिमुपैति मनः।।
(११.१०.०६)

बल० - परिवर्तनचक्रगते भुवने
भुवनेष्वपि कोऽस्त्यवशिष्ट, इदम्।
अवधार्य भवोद्भवभोगगणान्
पुनरुक्तिविरक्तिमुपैतु मनः।।
(११.१०.०६)

परमा० - पदशास्त्रपरिष्कृतिशालि रस-
ध्वनिवक्रमलङ्कृतिमालि वचः।
तव निर्भरमद्य निपीय पुनः
पुनरुक्त्यनुरक्तिमनायि मनः।।
(११.१०.०६)

बल० - रविरैति निशैति सरोज! सखे!
घटसे रमयोचितया सपदि।
रसिकभ्रमरस्तुत! तावदिदं
तनुकं न विरक्तिमुपैतु मनः।।
(११.१०.०६)

परमा० - भवताद् भवतो निगमान्तनिभा
क्षणदा क्षणदानपराऽतिशुभा।।
(११.१०.०६)

(१२)

## कविता कवितापमपाकुरुते

परमा० - अचिरं चिरसञ्चितचित्तमलं
व्यवधूय धियं धवलीकुरुते।
कृतिपङ्क्तिमुदे समुदेतु न वा
कविता कवितापमपाकुरुते।।
(१२.१०.०६)

बल० - सुखयन्ति प्रसूः शिशवस्तरलाः
सुहृदः सुहृदः समनिर्वृतिदाः।

प्रियमेव प्रियेव हृदं विशती
कविता कवितापमपाकुरुते।।

(१२.१०.०६)

परमा० -        भवता गुरुकाव्यगुणैः सहिता
प्रहिता शशिकान्तमणिग्रथिता।
रसयन्त्यपि काव्यसुधासुहितान्
कविता कवितापमपाकुरुते।।

(१२.१०.०६)

परमा० -        विमनायितमानसमानुषहृद्-
गतरुङ्गरलं ह्ययशो हरते।
प्रसरन्मकरन्दयशःकुमुदैः
कविता कवितापमकुरुते।।

(१३.१०.०६)

## (१३)

## संस्कृतं प्राकृतं वचः

अहो! तत् प्राकृतं हारि
प्रियावक्त्रेन्दुसुन्दरम्।
सूक्तयो यत्र राजन्ते
सुधानिःष्यन्दनिर्झराः।।

(कस्यचित्)

परमा० -        माध्वीकं प्राकृतं चञ्चच्चञ्चरीकप्रचारितम्।
अमृतं संस्कृतं धावत्सुधान्धोऽधरधारितम्।।

मृत्तैलं प्राकृतं रक्षद् बुभुक्षुमनुजव्रजम्।
संस्कृतं च शिलातैलं धुताधुनिकधीध्वजम्।।

(१४.१०.०६)

बल०- निर्गलन्नागरीकण्ठात् संस्कृतं संस्कृतं वचः।
प्राकृतं प्राकृतानां तु मुग्धानां प्राकृतं वचः।।

(१४.१०.०६)

बल०- जयतात् प्राकृता वाणी प्राक् कृता सर्वगामिनी।
बद्धैर्बुभुत्सुभिर्बुद्धैर्युगपद् योपयोजिता।।

(१४.१०.०६)

बल०- विधिशेषोऽर्थवादोऽयं पठतु प्राकृतं भवान्।
''विहिसेसो अत्थवाओ पढउ प्पाउअं भवं।।।''

(१४.१०.०६)

परमा०- प्राकृतं ग्राम्यसरसीपद्मसौरभमाः! प्रियम्।
संस्कृतं श्रीमदामोद उन्नयन्नागरश्रियम्।।

(१४.१०.०६)

परमा०- आर्यः प्रसीदतु विषीदतु नैव नैवम्
अत्रास्ति कोऽपि कलहोऽद्भुतभाषयोर्नौ।
माता मता विबुधवाक् सकलप्रदात्री
सा प्राकृता प्रियसखी हृदयं प्रविष्टा।।

बल०- (सा पाउआ पियसही हिययं पइट्ठा)

परमा०- आर्यः प्रसीदतु विषीदतु नैव नैव
मत्रास्ति कोऽपि कलहोऽद्भुतभाषयोर्नौ।
सौधोपक्लृप्तमणिमौक्तिकभव्यभूषाऽऽ
प्यासीत् प्रसादितगुरुर्गिरिजर्षिवेषा।।

(१४.१०.०६)

# (१४)

# त्रिजगदेतदजस्त्रपलायनम्

परमा० - दिवि विधातृपदाय पलायनं
भुवि महेन्द्रपदाय पलायनम्।
धरणये तदधश्च पलायनं
त्रिजगदेतदजस्त्रपलायनम्।।
(१६.१०.०६)

बल० - रसिकता सिकता कविता इता
ननु कलाऽविकला विकलाऽधुना।
कुरुत एव धनं प्रति सम्प्रति
त्रिजगदेतदजस्त्रपलायनम्।।
(१६.१०.०६)

परमा० - कलुषमानुषनित्यकुकृत्यज-
व्रजदहिव्रजभीबहुलायनम्।
अनवगम्य विरम्यपदास्पदं
त्रिजगदेतजस्त्रपलायनम्।।
(१७.१०.०६)

बला० - पदगता कमलाऽपि सलालसं
लसति लोकसमूहसमीहिता।
तमतिरिच्य मुरारिमरे कथं
त्रिजगद्! एतदजस्त्रपलायनम्।।
(१७.१०.०६)

परमा० -　　सुभगतातिशयः कवितागतो
　　　　वितनुतेऽतनु तेऽङ्ग! मुदङ्गणम्।

(१७.१०.०६)

(१५)

## दीपावली

परमा० -　　चारुचञ्चत्तडिद्दीपिकालङ्कृतं
　　　　विस्फुरन्नैकविद्युज्झरीझङ्कृतम्।
　　स्नेहसर्पिर्ज्वलद्धर्षदीपोल्लसत्
　　　　सर्वमुल्लासयत् पर्व दीपावली।।

(२१.१०.०६)

बल० -　　राधिकाराधितोऽसंख्यसूर्यप्रभः
　　　　कृष्णचन्द्रोऽस्त्वमातुल्यचित्ते स्फुटः।
　　हायनेऽस्मिन्न यायाद् वृथा प्रार्थितं
　　　　सर्वमुल्लासयत् पर्व दीपावली।।

(२१.१०.०६)

(१६)

## गोवर्धनधारिगौरवम्

परमा० -　　संवृतयामुनधारं संभृतगुरुगिरिविपद्घटाभारम्।
　　विकटशकटसंहारं कलये कञ्चित् प्रपञ्चसञ्चारम्।

(२२.१०.०६)

बल० - चण्डांशुजास्थनागोत्तमाङ्गरङ्गे प्रचण्डताण्डवकृत् !।
आखण्डलमदखण्डन ! खण्डितमुत्थापय पण्डित ! प्रेम्णः।।
(२२.१०.०६)

परम० - रोमाञ्चयति तवार्या नार्या हार्याननाब्जपटलीव।
संभृतभावस्तोका शोकविमोका विदग्धलोकानाम्।।
(२२.१०.०६)

## (१७)

## भ्रातृद्वितीया

परमा० - प्रबुद्धतां नित्यविशुद्धतां च रक्तात्मतां पावनतां दिशन्ती।
दीपोत्सवानन्तरमागतेयं भ्रातृद्वितीया तिथिरद्वितीया।।
(२४.१०.०६)

बल० - सुखे च दुःखे न जहाति जातु परं प्रियो बन्धुरवन्ध्य एकः।
ज्ञातुं हरिर्भ्रातृतमोऽद्वितीयो भ्रातृद्वितीया तिथिरद्वितीया।।
(२४.१०.०६)

## (१८)

## ईदपर्व

परमा० - भवेशभूषोदयदर्शनाप्तपर्याप्तदीर्घव्रतमुक्तिलाभम्।
मोहं मदं मन्दयतादमन्दं मौहम्मदानामिदमीदपर्व।।
(२५.१०.०६)

## (१९)

# षष्ठीपूजा (छठ)

परमा० - रम्भास्तम्भातिशोभे विमलजलतटे मण्डिते चेक्षुदण्डै
धूपैर्गन्धानुलेपैरमलपरिमलैर्वासिते दिग्विभागे।
पक्वान्नैरिक्षुरम्भाप्रभृतिऋतुफलैरानमच्छूर्पहस्तै
र्दत्तार्घ्यो भक्तिनम्रैर्जगति विजयते कोऽप्यसौ षष्ठ्युपास्यः।।
(२८.१०.०६)

## (२०)

# जीवितं सफलं लोके

बल० - कुसुमसमयाकारं प्रायो विभाति सुयौवनं
सपदि समयाघातैः सर्वे गलन्ति बलादयः।
परिणमति वार्धक्यं देहो नु दुःखपरम्परां
कथमु विमृशन् यायाद् धैर्यं स्थिरामथ निर्वृतिम्।।

उदयमयनात् पूर्वं यावत्तथास्तमनात् परं
जठरपिठरापूर्त्यै नित्यं श्ववत् परिवृत्यते।
निशि च दहति स्वप्नाकृत्याऽप्रपूरितवासना
किमु न मरणं श्रेयोऽस्त्यस्मादिदं यदि जीवितम्।।

पतति कुसुमं रम्याकारं पतन्ति च वाग्वयो
दृगपि तमसा रुद्धा बुद्धिर्बुधामपि बाध्यते।

गलति च महास्कन्धैर्व्याप्तस्तरूपमविग्रहो
ननु तनुवनोद्देशे वृद्धत्वमारुति वाति रे।।

सततमसुखाविद्धं दुःखोपघातविशङ्कितं
विरहभयभीतं यत् तृष्णाहुताशनवर्धनम्।
महति महताऽहङ्काराब्धौ तथा विनिपातकं
सुखमसुखतः शुष्कं दृष्ट्वा सुखं कथयेत्तु कः।।

श्रुतिभिरुदिता ज्ञाताः कामा अनर्थपरम्परा
अनुभवति भुञ्जानं तृप्तिं मनो न मनागपि।
तदपि विषयान् दृष्ट्वा बुद्धेर्बलं बत स्रंसते
तितउविवरात् कस्मात् सद्यो यथा सिकताव्रजम्।।

बहुनि पठितं शास्त्रे दद्यान्मनो न सकामतां
तदपि करणं सर्वं जातं फलैषणयाऽऽविलम्।
ग्रसितमभितश्चेतो भावैर्ममास्ति कृतागसां
मयि नहि बलं ज्ञातं तत्त्वं यथाऽभ्यसितं भवेत्।।

बहुलविषयावेगा निद्रा प्रमादपुरस्सरा
गुरुजनवचोभङ्गः शास्त्रानुसारविहीनता।
इह हि समये किञ्चित् कर्तुं बलं समवस्थितं
तदपि भरितं प्रत्यूहानां कुलैर्बत यौवनम्।।

(३१.१०.०६)

परमा० - हरति हृदयं हृद्या सद्यो हि ते हरिणी हठात्

(३१.१०.०६)

परमा० - अकस्मादुदभूत् कस्माद् वैराग्यं तदिदं तव।
जगत्सौन्दर्यविमुखमवधीरितजीवितम्।।
जीवितं सफलं लोके लोकेश्वरसमर्पितम्।
कर्तव्यकव्यसुभगमग्निष्टोमेष्टिसन्निभम्।।
योगैः समाश्रिता भोगा अभियोगि हि यौवनम्।
प्रतिक्षणनवं नाम सौन्दर्यं सुषमावनम्।।
सत्यं सत्यपदस्थानं सम्पदा विपदन्तकाः।
सुधाकुम्भोपमं पुंसां सौख्यं स्वर्गपरम्परा।।

(३१.१०.०६)

## (२१)

## जयति सयुग्

परमा० - हृदयमुदयपद्मवत् प्रफुल्लं
रविरिव दिङ्मुखमुज्ज्वलं विधत्ते।
विपदि सपदि सम्बलं प्रदत्ते
जगति सयुग् जलमुग् विना निनादम्।।

(१७.११.०६)

बल० - नवलकमलनीलकोमलाङ्गे
स्थितवति किं सुहृदन्तरानुयोगैः।
सुरतरुमुपलभ्य दानशीलं
ननु न ददत् कृपणोऽपि याच्यते वा?।।

(१८.११.०६)

बल० - न जाने मूर्खत्वं स्थिरपदमितो यास्यति कदा
कविम्मन्यो घ्रात्वा कतिचन पदान्येव सुधियाम्।

तपोभिर्दुष्प्रापां सततविषयासङ्गरसिकोऽ
लसो यायात् कस्मादहमिव शुभां शाब्दिकगतिम्।।

(१८.११.०६)

परमा०- न चैतन्मूर्खत्वं परमुषसि जागर्त्तिरचिरात्
त्रुटीतम्याः पश्चात् तदनुभवभव्या भृशमये।
अपूर्णेयं पूर्नः क्व नु ननु निरातङ्कगमना
मनागप्येतस्याः कलिमलिनबुद्धेस्तनुभृताम्।।

बल०- अत्यन्तसुन्दरमुदारगुणैरुपेतं
काव्यं भवान् प्रहितवान् मुदितोऽस्मि भूयः।

परमा०- भूयस्ततोऽपि हृदि कोऽपि तव प्रहृष्टो
दृष्ट्वास्मि पद्यमनवद्यमिहाद्य सद्यः।।

(१८.११.०६)

## (२२)

## सुप्रभातम्

परमा०- मदयति मधुरं ते भावनाभव्यकाव्यम्।

(१९.११.०६)

परमा०- असिततिमिरवासोवल्लिकायां हतायां
दिशमतिशयलज्जालोहितास्यामुदीक्ष्य।
पुलकिततनुरञ्चत्काञ्चनाभः स्वयञ्चो
च्चरति रतिनिभां तां भास्करः सुप्रभातम्।।

(२०.११.०६)

परमा०- स्वयमिह मिहिरं सरोजिनीत
श्चिरमतिदूरमुदीक्ष्य हन्त! यातम्।

भृशमुषसि विशोककोकलोको
वदति पतिं दिवसस्य सुप्रभातम्।।

(२२.११.०६)

## (२३)

# मन्दाकिनी

बल०- पूता पीतपटाङ्घ्रिचुम्बनवशाज्जीवातुभूता विधेः
शर्वेणापि ससम्भ्रमं प्रणिहिता भूभृच्छिरःपूजिता।
त्रैलोक्याघहरी सकृत्पतनतो या भुक्तिमुक्तिप्रदा
दिव्या राजति राधिकानयनयोः सापाङ्गमन्दाकिनी।।

श्रीनाथाङ्घ्रिनखोद्भवा कमलभूलोके स्थिताऽप्युन्नते
प्राप्यापि प्रमथाधिपस्य प्रयतं गङ्गोत्तमाङ्गं शिरः।
नाप्युच्चैःशिरसः शिरस्सु विरता या स्वामिनो भूभृतां
नीचामुद्धृतये दयाविगलिता वर्धेत मन्दाकिनी।।

(२५.११.०६)

परमा०- सन्दृब्धं नव्यकाव्यद्वयमिदमनघं श्राव्यतामद्य सद्यो
नद्यास्तीरे सुराणामलिपथवसथे रामवाटीकुटीरे।
वक्ता भट्टः प्रभाकृत् सदसि रवमुदन्नङ्घ्रिरध्यक्षयंश्च
स्वाध्यायोऽध्येय इत्याकृतिरिह विषयो भाति मीमांसकानाम्।।

(२६.११.०६)

परमा०- वैदुष्यं नाम सत्सु प्रविरलसरलात्मैकनिष्ठप्रतिष्ठं
बाह्यासङ्गव्यपेक्षं हितमितवचनोच्चारणापक्षपाति।
ऊहापोहोपलब्धोत्तमनिगमरसोन्मेषमन्तःप्रदिग्धं
श्रीमद्भट्टेऽनुभूतं ननु निभृतमहो! सर्वमेतद्ध्यखर्वम्।।

(१७.११.०६)

बल० - सत्यं सत्यं यथार्थं भणति ननु भवान्
वास्तवार्थावगाहि।
(१७.११.०६)

## (२४)

## अयोगिनो योगाद् योगित्वम्

बल० - कर्तव्यमिति करोम्यथ
भोक्तव्यं चेति भोजनं कुर्वे।
योगिन इव मम जाता
स्तव विरहे नीरसा विषयाः।।
(१७.११.०६)

परमा० - महदिदमाश्चर्यं मे
व्रजति विपश्चित् कथञ्चिदपि कश्चित्।
योगादयोगिनो मे
परमवियोगी सखाऽपि योगित्वम्।।
(१७.११.०६)

## (२५)

## सखे सन्निधेयम्

परमा० - सद्यः पद्यप्रणयनपराऽऽयोज्यतेऽकादमीस्थैः
स्पर्धा वर्धापनमयि सखे सन्निधेयं त्वयाऽत्र।
कालो होरात्रयमिह तिथिर्जेन्युवर्याश्च षष्ठी
यावद् विंशीं तिथिमिह पुनर्मासि प्रेष्या प्रविष्टिः।।
(०९.१२.०६)

(२६)

## कवित्वामृतनदी

परमा०- तनुस्तान्ता लक्ष्मीलवचपलया चङ्क्रमणया
मतिर्भ्रान्ता भूयोविषयविषया संक्रमणया।
गुणग्रावस्रावा कथमिव कवित्वामृतनदी
मदीयादुद्यायादवगुणगिरेर्हन्त! हृदयात्।।
(१०.१२.०६)

(२७)

## गगनगिरा

बल०- सुरवाङ् निसर्गपूता
पूततरा त्वद्वचोभिरुच्चरिता।
गगनगिरा संगमिता
पूततमैषा श्रुता सद्भिः।।
(२२.१२.०६)

परमा०- सारालङ्कृतिसारा
मद्गुणभाराऽपि भारती भवतः।
धूनोत्यासवधारा-
धुतमिव नवलोन्मदिष्णुं माम्।।
(२२.१२.०६)

(२८)

## किं प्राप्तो गृहतः

परमा० - किं प्राप्तो गृहतो भवान् किमु गृहे क्षेमं समं राजते
वर्षोऽस्मिन्नवले बलेन रमयन् सर्वान् भवान् भ्राजताम्।
कच्चिच्छोधविधिः सुधीस्तव नवं निश्वासमासीसदत्
स्फूर्जत्स्फूर्त्तिषु शैशिरेषु दिवसेष्वेतेष्वतीतेषु ते।।
(०९.१२.०६)

बल० - प्राप्तोऽहं गृहतोऽद्य तत्र सकलः क्षेमो विराराज्यते
वर्षं नव्यमिदं शुभाय परमानन्दाय संकल्पताम्।
विद्युद्वद् गतवद् दिनं झटिति मे ह्युन्मज्जतो मज्जतः
सान्द्रानन्दपयोनिधावतिसुखं सर्वं वकाशात्मकम्।।
(०९.१२.०६)

(२९)

## शास्त्रगोष्ठी

परमा० - मन्दाकिन्या मासिकी शास्त्रगोष्ठी
भाविन्येतत्सौरिवारे विहारे।
विज्ञानाख्ये ख्यातवक्त्री गुरुर्नः[१]
काव्याकारं मम्मटस्यावलम्ब्य।
दत्ताचार्यैः पूरणीया समस्या
पद्यस्यान्ते भाति 'किं कथ्यतां' च।

---

१. प्रो०दीप्तित्रिपाठिवर्याः

गोष्ठ्याध्यक्ष्यं मिश्रपादो[१] बिभर्त्ति
गोष्ठी चैषा भूष्यतामेत्य सद्भिः।।

(१०.०१.०६)

बल०- शालिन्या तं घटयतु विधिस्त्वेकयाऽप्यल्पतोऽल्पं
योऽस्मान् द्वाभ्यां सुखयति कृती जातिमच्छालिनीभ्याम्।

(१०.०१.०६)

## (३०)

## रामेव रामस्य गिरा मनोहरा

बल०- वयो नवीनं नवसङ्गिनी शुभा
नवार्थपूर्णं भवतां श्रुतं यथा।
सुखप्रदं वास्तु नवीनमस्त्वहं
तदर्थमर्थी नवलेन्दुशेखरात्।।

(२८.०७.०७)

बल०- सुधासंसिक्ताङ्गी विविधनवरागान्तरयुता
रसस्रोतोयुक्ता स्वजनसहिता निर्वृतिकरी।
गृहाभिख्याऽन्वर्थं जगति खलु लभ्येत कृतिना
मुकुन्दानन्दानां फलमिव नवोढेव वसतिः।।

(३०.०७.०७)

परमा०- विमुग्धभावा सरला सुकोमला
स्मृतापि सद्यो रतिदा लसत्पदा।
कान्तिप्रदा श्रान्तिहरा च नूतना
रामेव रामस्य गिरा मनोहरा।।

(३०.०७.०७)

---

१. प्रो०देवेन्द्रमिश्रवर्य:

## (३१)

## प्रेम्ण्यवश्यं स वश्यः

परमा० - कच्चिद् रामो जगति रमते दूरमानन्दरागात्
बल० - कालः कश्चित् परमबलवान् बाधते सङ्गमं नौ।
परमा० - कालो बालो व्यरचि बहुधा स्नेहवद्भिः सुहृद्भिः
कालोऽबालो भवतु च पुनः प्रेम्ण्यवश्यं स वश्यः।।

(०८.०२.०८)

## (३२)

## परीक्षणे तेऽद्य

परमा० - वाणीसुवीणारसनानिनादः
प्रेक्षावतां हृद्यतुलप्रसादः।
परीक्षणेऽनुक्षणमस्तु तेऽद्य
रामाऽविरामं बुधसाधुवादः।।

(१९.०२.०८)

## (३३)

## नववर्षम्

परमा० - पञ्चषष्टियुतयुग्मसहस्रं
वैक्रमं दिशतु वर्षमिदं वः।
सौख्यशान्त्यमितकान्तिसमृद्धीन्
उल्लसल्ललितकल्पितसिद्धीन्।

(०७.०२.०८)

(३४)

## विमलधियां पदम्

बल० - भवति परिषदा प्रयोज्यमानो
बुधदिवसे युगशोधपत्रपाठः।
प्रपठति ललिताऽभिधा जुनेजा
पठति तथान्यदनीशमिश्रनामा।

(१२.०२.०८)

परमा० - बुधदिनमेतद् विवक्षितं
ननु कतमद् भवता तिथिश्च का सा?

बल० - श्व इति मम तदाभिप्रेतमासीत्
प्रथमातिक्रमणे न मानसत्ता।।

परमा० - पदमद उदितं सुचिन्त्य मन्ये
ननु भवतोचितमेव शानजन्तम्।
गमयति युक्तं पदं तदुक्तं
सुनिकटवर्त्तिनि वर्तमानकाले।।

(१२.०२.०८)

बल० - जयतु चिरमियं विमर्शदृष्टि
र्विमलधियां जगतीह पण्डितानाम्।।
उपनतिसमये कथञ्चिदस्या
उपनमतीव गुणत्वमेव दोषः।।

परमा० - अपि विमलधियां पदं कथञ्चिद्
भवति नहि च्युतसंस्कृतित्वपात्रम्।

भवति हि सुतरां यदीह वृत्ति
        र्विमलविशेष्यपदं स्फुरेद् विलुप्तम्।।
(०७.०२.०८)

(३५)

## सोदरसंगमः

बल० - मम मनसि कदाचिदेति भावः
        किमु विधिना घटनापटीयसाऽहम्।
भवता सह संगमार्थमेवा
        गमितः स्वीयगृहान्नु राजधान्याम्।।
परमा० - अहमपि भृशमत्र भावये यद्
        विगततनौ ध्रुवमावयोर्व्यलासीत्।
सुमधुरतरसोदरत्वयोगो
        य इह युगे सहतीर्थ्यतामयासीत्।।
(१४.०२.०८)

(३६)

## अलमनल्पविकल्पनया

बल० - भवदमृतसमानकाव्यधारा
        स्नपयति मादयति प्रकाममेतम्।
जनमथ न प्रभुः समुत्तरीतुं
        तदपि दधाति निसर्गचापलं हि।।
(१४.०२.०८)

बल० - चरणसरसिजेषु पक्षतो मे
प्रणतियुता उपयान्तु धन्यवादाः

परमा० - इह हि नवल एष भाति वादो
भवति यतः प्रथितः स तत्त्वबोधः।।
(१४.०२.०८)

परमा० - अलमनल्पविकल्पनयाऽनया
ननु न याति मनो विरतिं यया।
क इह तुष्यति कामयमानया
ललनयाऽनृतकल्पितमानया।।
(१४.०२.०८)

(३७)

## शुभः स्यान्नववत्सरः!

बल० - पङ्क्तियुग्युगसहस्रतमस्ते
वत्सरः सुविदधातु शुभानि।
परम० - तावकान्यपि तनोत्वनिशं सः
सद्यशांसि शरदिन्दुनिभानि।।
(०१.०१.२०१०)

(३८)

## भवेन्नवलहायनम्

परमा० - विधूतविविधापदं सकलसम्पदामास्पदं
समुत्सवसमाकुलं प्रतिपलं स्फुरन्मङ्गलम्।
निरीतितितिनिर्भयं निरवशिष्टनष्टामयं
भवेन्नवलहायनं निभृतनव्यभव्यायनम्।।

विदां हृदि विलासिनः कमलया समुल्लासिनः
जगत्त्रयनिवासिनः व्रजरजोभिरुद्भासिनः।
कृपामतिकरम्बितं तदनुरक्तिभक्त्युद्धृतं
भवेन्नवलहायनं भगवदङ्घ्रिभावायनम्।।
(०१.०१.२०१०)

बल० - भवान् हि पृथिवीपतिः कविषु सुष्ठु संसाधितं
परमा० - सखे प्रभवति प्रभोरिह महत् कृपोल्लासितम्।।
(०१.०१.२०१०)

(३९)

## केऽपि जयन्ति विचाराः

बल० - नैवार्हन्ति विचाराः
सर्वे कवितापदं समधिरोढुम्।
श्रीखण्डमेव काष्ठं
लभते सुतनुस्तने स्थानम्।।

परमा० - सरसमसृणपदधारा-
वलिता ललितार्थलालनोदाराः।
केऽपि जयन्ति विचाराः
कवितावनिताकुचद्वयीहाराः।
(०२.०१.२०१०)

(४०)

## कवीन्द्राणी वाणी

बल० - सुवृत्तां सद्रीतिं नवनवरसात्मानमनघां
प्रसन्नामासन्नां गुणगुणितसज्जातिरुचिराम्।

परीपाकं प्राचां बहुलसुकृतानामसुकृती
कृते स्वानन्दानां सुतनुमिव नाप्नोति कविताम्।।

परमा०- समुन्मीलन्नानाजनुरतनुपुण्याङ्कुरचयं
समुद्यद्गम्भीरागमनिगमनैपुण्यनिलयम्।
गुरुज्ञानप्रह्वं विटपिनमिवाभ्यासरसिकं
कवीन्द्राणीवाणीतरुणभुजवल्ली वलयति।।

(०३.०१.२०१०)

बल०- स धन्यो वित्प्रह्वः कविरपि भवानेव भवति
परमा०- जनं चैनं सैकः कविजगति रामो रमयति।

(०३.०१.२०१०)

(४१)

## विट इव नवीनः कविवरः

बल०- प्रवृत्ता सद्योगान्नयनसरणीसम्भृतवपुः
कृताशङ्का दोषे तदपि सुखयन्तीन्द्रियचयम्।
विदग्धैः संभाव्या पिशुनवदनस्थानविकला
नवप्रेमप्राया जयति कविता नूतनकवेः।।

परमा०- पदानां विन्यासे प्रतिपदविमुग्धः सुकृतिनां
यशोलक्ष्मीलुब्धः परधनतिरोधानचतुरः।
स्फुरद्वाग्वैदग्धी बहुलबहिराडम्बरपटु
र्विटौपम्यं धत्ते जगति कति नूत्नः कविवरः!।।

(०४.०१.२०१०)

(४२)

## कृतिकन्यः कविर्धन्यः

बल० - रहस्यात्मोत्पन्ना मनसिशयरूपा क्रमभृता
निविष्टा सत्पात्रे परवसतिविश्रान्तिवितता।
परेषां च स्वेषां सुचिरमिव सौभाग्यजननी
कविं सत्पुत्रीवत् पितरमिव प्रीणाति कविता।।

परमा० - यथापेक्षं पुष्णन्नगणितगुणालङ्कृतिगणैः
क्षणान्मुष्णन् दोषानपि विशदयत्नैरनुगुणैः।
परीपाके पुण्ये प्रणयिनि जने चार्पणपरः
परः स्यात् को धन्यः प्रथितकृतिकन्यः कविवरात्।।

(०५.०१.२०१०)

(४३)

## स्त्रीव कविता

परमा० - चलच्चिन्ताकाशे मलयमरुदालीव जलदान्
दिवा दोषा स्वैरं रहसि रमयन्ती बहुतरम्।
स्फुटामन्दानन्दान्यथितमथिताशेषविषयं
कवीन्द्रानुन्निद्रान् जगति कुरुते स्त्रीव कविता।।

(०६.०१.२०१०)

(४४)

## पुरन्ध्रीव कविता

परमा० - प्रियानुत्साहाढ्यान् करुणकरुणान् विस्मयमयान्
विनोदव्यामिश्रांस्तरलतरलान् जातु घृणितान्।

रुषाविष्टाञ्छिष्टान्  नवनवरसोन्मेषविशदान्
पृथून् भावानेषा प्रथयति पुरन्ध्रीव कविता।।
(०७.०१.२०१०)

बल० - कविस्वान्तेऽश्रान्ते विचरति विचारेऽपि विविधे
कृती कश्चिद् भावो व्रजति कवितात्मानमथवा।
वरिष्ठं वा काष्ठं मलयशिखरे भातु सुतनु-
स्तनस्थानस्थानं मलयजमृते नैव लभते।।
(०९.०१.२०१०)

(४५)

## वणिगिव कविः क्लेशसहनः

बल० - सुपोषायार्थस्य प्रतिपदमदभ्रं प्रयतनं
न सिद्धानां सिद्धैर्विविधपरिमाणैश्च तुलना।
रसादिव्यापारैर्निखिलजनतापोषणपरात्
परः क्लेशं कोऽसावनुभवति पत्युः कविविशाम्।।
(११.०१.२०१०)

परमा० - सदाऽर्थं सञ्चिन्वन् स्वपितिमपि सम्यङ् न लभते
पदानां विन्यासे रुचिमुचितमात्रं च दधते।
प्रसिद्ध्यै श्रीवृद्धयै जगति बहुलायासवहनः
सखे सत्यं विग्नो वणिगिव कविः क्लेशसहनः।।
(१३.०१.२०१०)

युगमिदं संचारक्रान्तिमयम्। अद्यत्वे करे-करे जङ्गमालापयन्त्रम्। युवजनाः चित्रविचित्रलघु-सन्देशमाध्यमेन अहर्निशं विनोद-मोद-मग्नाः, विचार-विनिमयलग्नाश्च लक्ष्यन्ते। काव्यमिदम् अनयैव शैल्या सन्दृब्धम् एकविंशशताब्द्यां किमप्यभिनवं संस्कृत-कवित्वनवनीतं पाठकेभ्यः परिवेषयति। काव्येऽस्मिन् योग्यकवियुवानौ डॉ.परमानन्दझा-डॉ.बलरामशुक्लौ विविधान् प्रसङ्गान् पुरस्कृत्य परिष्कृतकाव्यपद्धत्या मनो विनोदयतः।



युगमिदं संचारक्रान्तिमयम्। अद्यत्वे करे-करे जङ्गमालापयन्त्रम्। युवजनाः चित्रविचित्रलघु-सन्देशमाध्यमेन अहर्निशं विनोद-मोद-मग्नाः, विचार-विनिमयलग्नाश्च लक्ष्यन्ते। काव्यमिदम् अनयैव शैल्या सन्दृब्धम् एकविंशशताब्द्यां किमप्यभिनवं संस्कृत-कवित्वनवनीतं पाठकेभ्यः परिवेषयति। काव्येऽस्मिन् योग्यकवियुवानौ डॉ.परमानन्दझा-डॉ.बलरामशुक्लौ विविधान् प्रसङ्गान् पुरस्कृत्य परिष्कृतकाव्यपद्धत्या मनो विनोदयतः।

